कर्तृत्वावगमात् एव समाख्याहेतुको विनियोगः सेत्स्यतीति भर्तृमिश्रादिमतं दूषयितुमुपन्यस्यति * तत्रेति * यत्रातिदेशे धर्मसम्बन्धे सारूप्यादुपस्थापनस्य सामर्थ्यं प्रसिद्धं तत्रापि तावद्रूढिः सारूप्यहेतुकस्योपस्थापनस्य नास्त्यत्र त्वौपदेशिके क्रियाकर्तृसम्बन्धे सारूप्यहेतुकस्योपस्थापनस्य सामर्थ्यं दूरात्सारितमित्येवं दूषयति *
८३५।५ न त्विति * उपस्थापनस्य नित्यमुपस्थापकापेक्षत्वादुपस्थापकसारूप्यसापेक्षत्वे ऽपि सामर्थ्यशब्देन सह समासाविघातः । कण्वरथन्तरशब्दस्य यौगिकत्वे सत्यरथन्तरे रथन्तरे रथन्तरशब्दस्य वत्यर्थकल्पनया शब्दोक्तात्सादृश्यात्प्रवृत्तेः सादृश्यस्य च धर्मसामान्यलक्षणत्वात् रथन्तरधर्मातिदेशकत्वं स्यात् रूढित्वात्तु शब्दसादृश्येन रथन्तरशब्दोपस्थापनद्वारा रथन्तरोपस्थापने ऽपि शब्दसादृश्यस्य प्रत्यक्षस्य गम्यत्वेन शब्दत्वात्तद्वारेण रथन्तरोपस्थापने शब्दस्याव्यापारान्नातिदेशता युक्तेति दार्शिमकदृष्टान्तेन रूढिसादृश्यहेतुकस्योपस्थापनस्यातिदेशिकधर्मान्वयासमर्थतोपपादिता । उपदेशे तु वत्यर्थानपेक्षणेन शब्दोक्तस्यापि सारूप्यस्य हेतुत्वाभावात् सादृश्यवञ्च सारूप्याभावात्सादृश्यवञ्च सारूप्यसम्बन्धं विनानर्थकथाभावेन सम्बन्धाभिमुख्यरूपेणानुपस्थापकत्वात् स्वरूपमात्रेण चोपस्थापने ऽपि गोगवयवत्सम्बन्धाप्रतीतेरशब्देन सारूप्येणोपस्थापने शब्दस्याव्यवहारात् वैदिके च शब्दव्यतिरिक्तप्रमाणाभावात् रूढिसारूप्यस्य क्रियाकर्तृसम्बन्धस्य शक्तेर्दूरोत्सारितता किमुतेत्यनेनोक्तार्थाद्वा सम्बन्धमात्रे ऽपि सारूप्यहेतुकत्वोक्तस्योपस्थापनस्य शक्तिर्नास्ति तद्विशेषे तु क्रियाकर्तृसम्बन्धे दूरोत्सारितेत्यर्थः । भाष्यकृता ऽपि रूढितानतिमतेति सूचयितुमाह * याचकादीति * परपक्षे दोषमुक्त्वा स्वपक्षे दोषं परिहर्तुं निर्दोषत्वं प्रतिजानीते * तस्मादिति * अनुभाषणपूर्वं परिहरति * यद्यपीति * सत्यं समाख्याहेतुकात् विनियोगात्प्रागध्वर्युणाध्वर्यवानुष्ठानादध्वर्य्वाध्वर्यवयोः सम्बन्धे प्रत्यक्षप्रमाणं नास्ति तथाप्यध्वर्युणाध्वर्यवं कार्यमित्येवं रूपं श्रुत्याख्यं प्रमाणं समाख्यया क्रमादपारम्पर्येणाङ्गाङ्गिसम्बन्धबोधाख्याद्विनियोगात् प्रागनुमाय सम्बन्धे प्रमाणं भविष्यतीत्यर्थः । सम्बन्धात्प्राग्यौगिकयाः समाख्यायाः प्रवृत्तिरयुक्तेति यदुक्तं तत्परिहर्तुमाह * वेदे हीति * अनादित्वोपलक्षणार्था वेदोक्तिरनादिसमाख्याप्रमाणकस्य सम्बन्धस्यानादित्वादिदानीं ततः समाख्यातृप्रयोगात् प्रागेव पूर्वेष्वनुष्ठातृषु निष्पन्नस्तस्मिन् प्रतीते सतीदानीन्तनेषु प्रयोक्तृषु समाख्या प्रवृत्तेत्यर्थः । समाख्यातः प्रागङ्गाङ्गिसम्बन्धप्रतीतौ समा-

# विज्ञप्तिः।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति।

५ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति।

८ साम्प्रतं मुद्र्यमाणा ग्रन्थाः-

| | | मुद्रिताः स्तबकाः |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम्। | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थे विरचित भाट्टभाषा प्रकाश सहितम्। सम्पूर्णः। | (वेदान्तः) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः। | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्र भाष्यम्-बादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम्। सम्पूर्णः। | ( वेदान्तः ) | ६ |

(९) स्याद्वादमञ्जरी—मल्लिषेणनिर्मिता सम्पूर्णम्। (जैनदर्शनम्) २

(१०) सिद्धित्रयम्—विशिष्टाद्वैत—ब्रह्मनिरूपणपरम्—श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम्। सम्पूर्णः (वेदान्तः) १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) २

(१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः। सम्पूर्णः (न्यायः) ५

(१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् स० (मीमांसा) २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (वेदान्तः) १२

(१५) शिवस्तोत्रावली। उत्पलदेवविरचिता। श्रीक्षेमराजविरचितवृत्तिसमेता। (वेदान्त) २

(१६) मीमांसाबालप्रकाशः (जैमिनीयद्वादशाध्यायार्थसंग्रहः) श्रीमद्रूपत्रयवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका (प्रभाकरमतानुसारि मीमांसादर्शनम्) महामहोपाध्याय श्रीशालिकनाथमिश्र विरचितम्। (मीमांसा) २

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतश्च। (वेदान्त) ३

(१९) कात्यायनश्रौतसूत्रम् महामहोपाध्याय श्रीकर्काचार्यविरचित भाष्यसहितम्।

(२०) ब्रह्मसूत्रभाष्यम् श्रीभास्कराचार्यविरचितम् (वेदान्त)

पत्रादिप्रेषणस्थानम्

हरिदासगुप्तः,
चौखम्बा-संस्कृतपुस्तकालय
बनारस सिटी।

